वेदान्तपरभागवतं

वसुदेवः शुद्धसत्त्वं तद्वृत्तिर्देवकी मता ।
कृष्ण आत्माऽऽगतस्तत्र पितृबन्धविमोचकः ॥ १॥

गोकुलं प्रापितोऽथापि दैवात्पित्रेन्द्रियाभिधम् ।
सवृत्तिसात्त्विकात्माख्ययशोदानन्दतातभाक् ॥ २॥

दुर्वासनापूतनाघ्नो रेमे गोप्याख्यवृत्तिभिः ।
विलीय तत्सञ्चितगोरसाद्गोगोपपालकः ॥ ३॥

नानाकौतुककृद्दुर्हृद्वृत्तिवृन्दावने स्थितः ।
गोप्याशापूरकोऽविद्यानिशायां चित्ररासकृत् ॥ ४॥

गोप्योर्द्वयोर्द्वयोर्मध्ये वशस्तदनुरूपवत् ।
रेमे दैवात्तद्वियुक्तो दुर्हृत्प्राक्पितृसङ्गतः ॥ ५॥

भवाब्धिमध्ये देहाख्यां कृत्वा द्वारवतीं पुरीम् ।
सोऽनुप्रविष्टस्तां तत्र वृत्त्याख्या विविधाः स्त्रियः ॥ ६॥

सर्वाः पतिव्रताः कान्तं मेनिरे तं वशीकृतम् ।
आत्मारामोऽप्यसङ्गोऽपि ततो दीन इवाबभौ ॥ ७॥

षोडशस्त्रीसहस्रेशः संसारं समवर्धयत् ।
परोपदेशकृत्पञ्चप्राणपाण्डवपालकः ॥ ८॥

उरीकृत्य ब्रह्मशापं विनाश्य स्वजनान् क्षणात् ।
पुरीं द्वारवतीं चापि कृष्ण एकस्ततः स्वयम् ॥ ९॥

हृतपाण्डवसारोऽगाद्वैकुण्ठं पूर्वधाम तत् ।
भक्तः सुभक्त्या भगवत्सम्बन्धीदं सदा पठेत् ।
भवार्तिहृद् भागवतं स नूनं भवभर्जकः ॥ १०॥

इति श्री परमपूजनीय श्रीवासुदेवानन्दसरस्वतीविरचितं
वेदान्तपरभागवतं सम्पूर्णम् ॥